(प्रकाशम्) सहि सुलक्खणे ! जाणिदासि ता मुंच णअ-णाइं (१) ।

सुलक्षणा । (नयने परित्यज्य सप्रणयकोपम्) हला विअक्खणे ! एद्दहमेत्ते वि सलिलसित्तसणगुणगंठिगाढे वि सिणेहे कधं उब्भिण्णसिहा (क) खंजरीटी विअ अदंसणा चिट्ठसि ? ता एसा दे कुविस्सं (२) ।

विचक्षणा । (सप्रश्रयम्) (ख) । पिअसहि सुलक्खणे ! मा कुप्प, महामंतिभागुराअणणिओओ एत्थ अवरज्झदि ण उण अहं (३) ।

सुल । (सोपहासम्) को तुम्हाहिंतो अण्णो (ग) छगुण्णणिउणो ? (४) ।

---

(१) प्रियसख्याः सुलक्षणाया इव करस्पर्शः । सखि सुलक्षणे ! ज्ञातासि, तन्मुञ्च नयनानि ।

(२) हला विचक्षणे ! एतावन्मात्रेऽपि सलिलसिक्तशणगुणग्रन्थिगाढेऽपि स्नेहे कथमुद्भिन्नशिखाखञ्जरीटीवादर्शना तिष्ठसि ? तदेषा ते कुपिष्ये ।

(३) प्रियसखि सुलक्षणे ! मा कुप्य, महामन्त्रिभागुरायणनियोगोऽत्रापराध्यति न पुनरहम् ।

(४) को युष्मत्तोऽन्यः षाड्गुण्यनिपुणः ?

---

(क) उद्भिन्नशिखा उद्गतशिरोरुहा खञ्जरीटी खञ्जनपक्षिणी । खञ्जनस्य शिखोदये नीडात् निःसरणं प्रसिद्धम् ।

(ख) सप्रश्रयं सविनयम् ।

(ग) षाड्गुण्यनिपुणः षण्णां गुणानां सन्धिविग्रहयानासनद्वैधो-

विच। अम्हारिसजणजोग्गं महिलाछगुणअं क्खु एदं (१)।

सुल। महिलाछगुणएण जइ महिलाअणस्स (घ) अदंसणं ता अम्हारिसीओ अक्खिहिं वि ण दीसंति (२)।

विच। अध दे कीदिसं महिलाछगुणअं? (३)।

सुल। तुमं भण दाव उण अहं भणिस्सं, पठमं सहआरमंजरीओ उब्भिज्जंति पच्छा ता चुंबिणी कलअंठी (ङ) कंठमुद्दं सिठिलीकरेदि (४)।

विच। ता सुण—अहमेक्कदा भअवदा भागुराअणेण सबहुमाण भणिदा, अधा, विअक्खणि! तुए अम्हाणं राअरहस्से सहाज्जं कादव्वंत्ति (५)।

---

(१) अस्मादृशजनयोग्यं महिलाषाड्गुण्यं खल्वेतत्।

(२) महिलाषाड्गुण्येन यदि महिलाजनस्यादर्शनं ततोऽस्मादृश्योऽक्षिभिरपि न दृश्यन्ते।

(३) अथ ते कीदृशं महिलाषाड्गुण्यम्?

(४) त्वं भण तावत् पुनरहं भणिष्ये, प्रथमं सहकारमञ्जर्य उद्भिद्यन्ते पश्चाच्चुम्बिनी कलकण्ठी कण्ठमुद्रां शिथिलीकरोति।

(५) तत् शृणु—अहमेकदा भगवता भागुरायणेन सबहुमानं

---

भावसमाश्रयरूपाणां रसाहारः षड्गुणं तदेव षाड्गुण्यं तत्र निपुणाः विचक्षणाः।

(घ) महिलाजनस्य तव इति भावः।

(ङ) कलः मधुरः कण्ठो यस्याः सा कोकिलेत्यर्थः कण्ठमुद्रां कण्ठस्य स्तब्धीभावम्।

सुल। अहो दे मतिविहवो (च) जेण महामंती वि एदं संभावेदि। का वखना वकुलावली सुरहिगंधुग्गारत्ति (१)।

विच। यदो विणओवणदाए मए तधेत्ति पडिवस्सं, (छ) कधिदं अ मे तेण, जधा, एसो जो मिअंकवम्मा मिअंकावलीत्ति (२)।

सुल। तदो तदो (३)?

विच। तदो तं परिणीअ महाराअसिरिविज्जाहरमल्लदेवेण महिअलचक्कवत्तिणा होदव्वं, ता तुए तस्स कदाचिद् किदभवणभित्तिसंचारे (ज) वासहरे दंसिदेव्व, जेण देवस्स सिविणआवगमो होदि, कज्जंतरट्ठाणाइं दे

---

भणिता, यथा विचक्षणे! त्वयाऽस्माकं राजरहस्ये साहाय्यं कर्त्तव्यमिति।

(१) अहो ते मतिविभवो येन महामन्त्र्यपि एतत् सम्भावयति। का वर्णना वकुलावली सुरभिगन्धोद्गारेति।

(२) यतो विनयोपनतया मया तथेति प्रतिपन्नं, कथितं च मे तेन, यथा, एष यो मृगाङ्कवर्मा सा मृगाङ्कावलीति।

(३) ततस्ततः?

---

(च) मतिविभवः बुद्धिप्रभावः। एतं मतिविभवं सम्भावयति सम्मानयति। वकुलावलीति वकुलावलीभ्यः सुरभिर्वर्त्तते इति किं वक्तव्यमिति भावः।

(छ) प्रतिपन्नं करिष्यामि भवतः साहाय्यकमिति अङ्गीकृतमित्यर्थः।

(ज) कृतभवनभित्तिगर्भसञ्चारे कृतः भवनभित्तिगर्भे सञ्चारो यस्मिन्

हरदासो कधइस्सदि, एदस्सिं महाराअकज्जरहस्से तुमं तीए वि पिअसही तत्थ राअकज्जसाहज्ज विअ अत्थीअसि ण हु सोवाणपंतिमंतरेण वलहीए समारोहो। मए तदो हरदासकधिदकज्जाणुसारेण सा सविस्संभं भणिदा, जधा, सहि मिअंकावलि! इह वासहरे मअरद्धओ ओदरदि, तं अ दट्ठूण कंठाहिकट्ठिदेण हारकुसुमदामेण तुए अच्चिदव्वो, जेण दे एदादिसो कंतो होदि, तए वि तह अब्भुवअदं, किदं अ, उण हिंदोलए दंसिदा, केलिकैला-सभवणे घुट्ठिदप्फलिहभित्तिसु अत्तणो चित्तं लेहाविदा, थंभगब्भसंचारेण तस्सदु भणाइदा पढाविदा अ (४)।

---

(४) ततस्तां परिणीय महाराजश्रीविद्याधरमल्लदेवेन चक्रवर्त्तिना भवितव्यं तद्यथा तस्य कदाचित् ततभवनभित्तिगर्भद्वारे वासगृहे सा दर्शयितव्या, येन देवस्य सम्प्रागमनो भवति, कार्य्यान्तर-स्थानानि ते हरदासः कथयिष्यति, एतस्मिन् महाराजकार्य्यरहस्ये त्वं तस्या अपि प्रियसखी तत्र राजकार्य्यसाहाय्यमिवार्थ्यसे, न खलु सोपानपङ्क्तिमन्तरेण वलभ्यः समारोहः। मया ततो हरदासकथित-कार्य्यानुसारेण सा सविश्रम्भं भणिता, यथा, सखि मृगाङ्कावलि! इह वासगृहे मकरध्वजोऽवतरति तं च दृष्ट्वा कण्ठाकृष्टेन हारकुसुमदाम्ना

---

तथाभूते वासगृहे। तस्या अपि मृगाङ्कवत्याः प्रियसखी, तत्र मृगाङ्का-वत्यां राजकार्य्यसाहाय्यम् इव अर्थ्यसे प्रार्थ्यसे। सोपानपङ्क्तिं कौशलमिति भावः अन्तरेण विना समारोहः सम्यक् आरोहणं कार्य्या-नुष्ठानमिति भावः न खलु नैव प्रवलभ्यः कर्त्तव्य इत्यर्थः। कण्ठा-कृष्टेन कण्ठात् आकृष्टेन अर्चयितव्यः पूजनीयः मकरध्वज इति शेषः। कान्त पतिः। अभ्युपगतम् अङ्गीकृतम्।

सुल । अध तं विविहेहिं विलासेहिं प्रेक्खंतेण ( भ ) महाराएण किं पडिवस्सं ( १ ) ।

विच । जं केलिअरिणी ( ञ ) चाडुकम्मच्छलिदो रसकरी पडिवज्जेदि, तदो तरुणफोफलिच्छोलिददविड़सामलीदंतपंतिविसदासु सुद्धससिजामिणीसु असमंजसं विप्पलवदि, तधा तं ( २ ) ।

( संस्कृतमाश्रित्य )

ज्योत्स्नीं श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकै-

---

त्वयार्जयितव्यः, येन ते एतादृशः कान्तो भवति, तथापि तथाऽभ्युपगतं, कृतञ्च, पुनर्हिन्दोलायां दर्शिता केलिकैलासभवने सुस्थितस्फटिकभित्तिषु चात्मनश्चित्रं लेखिता तन्मुगर्भसञ्चारेण तत्तद् भणायिता पाठिता च ।

(१) अथ तां विविधैर्विलासैः प्रेक्षता महाराजेन किं प्रतिपन्नम् ?

(२) यत् केलिकारिणीचाटुकर्मच्छलितोऽरस्यकरो प्रतिपद्यते, ततस्तरुणपूगत्वगधर्षितद्राविड़श्यामलोदन्तपङ्क्तिविशदा सुशुभ्रशशियामिनीषु असमञ्जसं विप्रलपति, तथा तत् ।

---

(भ) प्रेक्षता पश्यता । प्रतिपन्नं व्यवसितम् ।

(ञ) केलिकारिणीचाटुकर्मच्छलितः केलिकारिण्या पोषितहरिण्या चाटुकर्मणा प्रियकार्य्यसाधनेन छलितः प्रतारितः । तरुणया अभिनवया पूगत्वचा धर्षिता तिरस्कृता या द्राविड़श्यामलीदन्तपङ्क्तिः द्राविड़देशीयश्यामाङ्गीदशनराजिः तद्वत् विशदासु निर्मलासु शुभ्रशशियामिनीषु चन्द्रशुक्लरजनीषु तथा तत् विप्रलपति विशेषेण प्रलापं करोति इत्यर्थः ।

(१) प्रलापप्रकारमाह ज्योत्स्नीमिति । भोः इति किङ्करसम्बोधनं

मन्त्रं तन्त्रमथ प्रयुज्य हरत श्वेतोत्पलानां स्मितम् ।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं क्षमे दश दिशस्तद्वक्त्रमुद्राङ्किताः ॥ १ ॥

मुल । तीए उण का अवत्था वट्टदि ? (१) ।

विच । (संस्कृतमेवाश्रित्य)

सौधादुद्विजते त्यजत्युपवनं द्वेष्टि प्रभामैन्दवीं
द्वारात् त्रस्यति चित्रकेलिसदसो वेशं विषं मन्यते ।
आस्ते केवलमब्जिनीकिसलयप्रस्तारशय्यातले
संकल्पोपनमत्तदाकृतिरसायत्तेन चित्तेन सा ॥ २ ॥

---

(१) तस्याः पुनः काऽवस्था वर्त्तते ?

---

हे किङ्कराः ! ज्योत्स्नीं चन्द्रिकामयीं रजनीं सान्द्रैः घनैः मषीकूर्चकैः मषीपुञ्जैः श्यामलिमानं श्यामताम् आनयत प्रापयत, अथ अनन्तरं मन्त्रं तन्त्रं प्रयुज्य श्वेतोत्पलानां स्मितं विकाशं हरत यथा तानि न विकसेयुः तथा तन्त्रमन्त्रौ प्रयुञ्जीध्वमित्यर्थः । तथा चन्द्रं शिलापट्टके क्षणात् कणशः कृत्वा चूर्णयत चूर्णं कुरुत येन अहं तस्याः रमण्याः अमलच्छाया इति भावः वक्त्रस्य मुखस्य मुद्रया अङ्किताश्चिह्निताः दशदिशः द्रष्टुं क्षमे शक्नोमि तन्मयत्वाद्दशदिशामिति भावः ज्योत्स्नादीनान्तु अती-वोद्दीपकत्वेन दिग्दर्शनव्याघातकत्वात् तत्तन्निवारणोक्तिरिति भावः । शार्दूलविक्रीडितं वृत्तम् ।

(२) सौधादिति । सा मृगाङ्कावली सौधात् हर्म्यात् उद्विजते उद्विग्ना भवति, उपवनं त्यजति, ऐन्दवीं प्रभां द्वेष्टि, चित्रकेलिसदसः चित्रितकेलिगृहस्य द्वारात् त्रस्यति बिभेति, वेशं परिच्छदं विषं मन्यते च । केवलं सङ्कल्पेन उपनमता उपस्थितेन तस्य राज्ञः आकृतौ यः रसः आस्वादः तदायत्तेन तदधीनेन चित्तेन मनसा अब्जिनीनां

संपदं उण तुमं कधेहि कीदिसं तं महिलाकुदु-
हलं ? ( १ ) ।

सुल । सुणु जादिसं । एकदाहं महाराएण कसे सप्प-
सादमादिट्ठा, जधा, ण तुए भिण्णरहस्सा ( ट ) देवी कादु-
व्व त्ति ( २ ) ।

विच । किं विअ तं ? ( ३ ) ।

सुल । तं जधा, अलिअविवाहविलक्खो ( ठ ) चारा-
अणो देवी धात्तेइअं वि प्पदारिदुमिच्छदि । तदा दिणा-
वसाणसमए तरुणनीरंधअंधआरं केसरतरुमारेहिअ प्पम-
दुज्जाणभज्झगामिणी तए मेहला साणुणासिअं भणिदव्वा,
जधा अयि मेहले ! इह वेसाहपुण्णिमाप्पदोसे ज्जेव तुए
मरिदव्वं ति भणिदा अ सा ( ४ ) ।

---

(१) साम्प्रतं पुनस्त्वं कथय कीदृशं तन्महिलाकुतूहलम् ?

(२) शृणु यादृशम् । एकदाहं महाराजेन कर्णे सप्रसादमादिष्टा, यथा, न त्वया भिन्नरहस्या देवी कर्त्तव्येति ।

(३) किमिव तत् ?

(४) तद् यथा, अलीकविवाहविलक्षश्चारायणो धात्रेयीमपि प्रता-
रयितुमिच्छति । तद्दिनावसानसमये नीरन्ध्रान्धकारे केसरतरुमारुह्य

---

पद्मिनीनां किसलया एव प्रस्तारा आस्तरणानि यस्य तादृशे प्रस्तरतले
आसने तिष्ठति । शार्दूलविक्रीडितं वृत्तम् ।

(ट) भिन्नरहस्या भिन्नं प्रकाशितं रहस्यं यस्यै तत् ।

(ठ) अलीकविवाहविलक्षः अलीकेन मिथ्याभूतेन विवाहेन विलक्षः
लज्जितः । केसरतरु' बकुलपादपम् । सानुनासिक प्रेतोक्तिरूपेण
इत्यर्थः ।

विच । तदो तदो (१) ?

मुल । तदो तीए सज्झसवसवेविदंगीए कधं कधं पि तदोहिमुहं भविअ किदणिबिड़ज्जलिसंपुडाए भणिदं, भअवदि असरीरिणि दिव्वे वाणि ! मं अणुकंपंतीए जधा मरणं तुए जाणिदं जीविदं वि मे जाण (२) ।

विच । तदो तदो ? (३) ।

मुल । तदो तधा जेव्वं कहदं, जइ गंधव्ववेअविअक्खणं (ङ) बह्मणं गुरुणा सक्कारेण अहिणंदिअ पाएसु वलंयती यन्तरमज्झदुआरेण सञ्चरदि तदा जीविदलंभो त्ति (४) ।

---

प्रमोदोद्यानमध्यगामिनी त्वया मेखला सानुनासिकं भणितव्या, यथा, अयि मेखले ! इह वैशाखपूर्णिमाप्रदोष एव त्वया मर्त्तव्यमिति भणिता च सा ।

(१) ततस्ततः ?

(२) ततस्तया साध्वसवशवेपिताङ्ग्या कथं कथमपि ततोऽभिमुखं भूत्वा कृतनिविड़ाञ्जलिसंपुटया भणितं, भगवति अशरीरिणि दिव्यवाणि ! मामनुकम्पयन्त्या यथा मरणं त्वया ज्ञातं जीवितमपि मे जानीहि ।

(३) ततस्ततः ?

(४) ततस्तथैव कथितं, यदि गान्धर्ववेदविचक्षणं ब्राह्मणं गुरुणा सत्कारेणाभिनन्द्य पादयोः पतन्ती जङ्घान्तरमध्यद्वारेण सञ्चरति तदा जीवितलाभ इति ।

---

(ङ) गान्धर्ववेदविचक्षणं गान्धर्ववेदेषु नृत्यगीतादिविद्यासु विचक्षणं निपुणम् । जङ्घयोरन्तरमेव मध्यद्वारं तेन सञ्चरति निःसरति ।

विच । अहो दे विअक्खणत्तणं ! जदो मुणिणो वि एव्वं सुमरंति, पादाहिं बह्मणस्स पवित्तणं त्ति (१) ।

सुल । (विभाव्य) अहो से किं पि कवडणाडअकइत्तणं बह्मणस्स ! (२) ।

विच । तदो तदो ? (३) ।

सुल । तदो तं सुणिअ मेहलाए अंसुजलगलज्जालाइं (ढ) णअणाइं उणउत्तसुपफुसन्तीए मह पुरदो जेव्व महाराअसमीववट्टिनीए देवीए तह ज्जेव विसण्णं देवेण वि देवी मण्णुमवहरंतेण चारायण चरिदं अ णिव्वाहंतेण भणिदा, जधा, सुंदरि ! मा विसण्णा होहि, जादो गंधव्ववेअविअक्खणो साहीणो ज्जेव बह्मणो तत् किं त्ति अंसुकणकरंबिअबिंबाहरा वट्टसि त्ति संठाविदा देवी, देवीए अ अहं अज्ज

---

(१) अहो ते विचक्षणत्वम् ! यतो मुनयोऽप्येवं स्मरन्ति, पादाभ्यां ब्राह्मणस्य पवित्रत्वमिति ।

(२) अहोऽस्य किमपि कपटनाटककवित्वं ब्राह्मणस्य ।

(३) ततस्ततः ।

(४) ततस्तच्छ्रुत्वा मेखलाया अश्रुजलगलज्जले नयने पुनरुत्पुनः प्रोञ्छन्त्या मम पुरत एव महाराजसमीपवर्त्तिन्या देव्या तथैव विषण्णं देवेनापि देवी मन्युमपहरता चारायणचरितं च निर्वाहयता भणिता, यथा, सुन्दरि ! मा विषण्णा भव, यतो गान्धर्ववेदविचक्षणः स्वाधीन

---

(ढ) गलन्ति अश्रुजलानि याभ्यां तादृशे नयने पुनः पुनः प्रोञ्छन्त्या मम इति पाठः समीचीनः । अश्रुकरम्बितबिम्बाधरा अश्रुभिः करम्बितः व्याप्तः बिम्बाधरः यस्याः तथाभूता ।

सा पुच्छिअ त्ति भणिअ पूआसक्कारं सज्जीकादुं पेसि-
दह्मि ( ४ ) ।

विच । ता एहि जधाणिद्दिट्ठमणुचिट्ठह्म ( १ ) ।

( इति निष्क्रान्ते ) ।

( इति प्रवेशकः ) ( ग ) ।

( ततः प्रविशति निविडोत्कण्ठो राजा
स्नानशुचिर्विदूषकश्च ) ।

राजा । (अनुध्याननाटितकेन) ।

क्रमसरलितकण्ठप्रक्रमोच्छासितोर-
स्तरलितवलिलेखासत्रसर्वस्वमस्याः ।
स्थितमतिचिरमुच्चैरग्रपादाङ्गुलीभिः
करकलितसखीकं मां दिदृक्षोः स्मरामि ॥ २ ॥

---

एव आज्ञापयतु किमित्यश्रुककर्म्बितबिम्बाधरा वर्त्तसे इति संस्थापिता देवी, देव्या चाहम् अद्य वा पूर्णिमेति भणित्वा पूजासत्कारं सज्जी-कर्तुं प्रेषितास्मि ।

(१) तदेहि यथानिर्दिष्टमनुतिष्ठावः ।

---

(ग) प्रवेशकः चेटीद्वयस्य नीचपात्रत्वेन तत्प्रयोज्यत्वादेतदंशस्य प्रवेशकत्वं यथोक्तं प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजित इति ।

(२) क्रमेति । मां दिदृक्षोः द्रष्टुमिच्छोः अस्याः कामिन्याः क्रमेण सरलितः सरलीकृतः यः कण्ठः तस्य प्रक्रमेण सरलीकरणेन इत्यर्थः तरलितं वलिलेखास्त्रत्वं त्रिवलीरेखारूपसूत्रं सर्वस्वं धनं यस्मिन् तथोक्तं करकलिता करधृता सखी यस्मिन् तादृशम् अवलम्बितसखीकर-

विदूषकः। मा समाधानभंगं (त) कुण, देवीपुरदो मेहला जीवइदव्वा (स्वगतम्) अइ दुट्ठदासि! णिवडि-स्सदि दे ऽज्ज कुरुद्दो चाराअणबम्मणो (१)।

राजा। तद्वचनमनाकर्ण्य तदेव क्रमेत्यादि पुनः पठति।

विदू। मा पुणो तं सुमर संदावदाइणी डाइणी क्खु सा (२)।

राजा। किमात्थ सन्तापकारिणीति? तस्त्व पञ्चम-काकलीकलगीतयः (थ) कर्णं कलुषयन्ति, सुधास्यन्दिनी-चन्द्रमूर्त्तिश्चक्षुषी तापयति, चन्दनरसनिष्यन्दस्तनुं दहति?

विदूषकः। भो वक्करं मए कहिदं, तुमं जेव्व सव्वदो सारमुच्चिणसि (द) हंसो जेव्व जलहिं दुद्धमुद्धरेदि किं उण

---

(१) मा समाधानभङ्गं कुरु, देव्याः पुरतः मेखला जीवयि-तव्या। अयि दुष्टदासि! निपतिष्यति तेऽद्य क्रुद्धचारायणो ब्राह्मणः।

(२) मा पुनस्तां स्मर, सन्तापदायिनी डाकिनी खलु सा।

---

मित्यर्थः सप्तपादाङ्गुलिभिः उच्चैः उन्नमितत्वेन इत्यर्थः अतिचिरं बहु-व्यथं स्थितं चरामि। मालिनीवृत्तं, न न म य य युतेयं मालिनी भोगिलोकैरिति लक्षणात्।

(त) समाधानभङ्गं मेखलाया जीवनार्थं कृतस्य समाधानस्य योग-विशेषस्य भङ्गम्। स्वस्थः अस्वस्थोऽसि इत्यर्थः।

(थ) पञ्चमकाकलीकलगीतयः पञ्चमः कोकिलनादः काकली सूक्ष्मस्वरविशेषः कलगीतयः मधुरास्फुटगीतिकाश्च कलुषयन्ति मलिन-यन्ति क्षोभयन्तीत्यर्थः।

(द) उच्चिनोषि गृह्णासि।

आज्ञापि मोच्या न हि केसरस्रक्
देवी न खण्ड्यप्रणया कथञ्चित् ॥ ५ ॥

विदूषकः । भोः किं एदेण दक्खिणवअणोवण्णासेण ? (न) पुराणपत्तमपेक्खिअ णो णवपल्लवो समुल्लसदि । ण अ तरुण-गंठिवलअकंदलोकवलणलुद्धो गंधहरिणो दवणअकेदिआए अहिरमदि (१) ।

राजा । सखि ! निरर्गलवागसि । यदनाशङ्कनीयं तदा-शङ्कसे ।

विदूषकः । किं मम परकेरिकाए चिन्ताए ता भणी-

---

(१) भोः ! किमेतेन दाक्षिण्यवचनोपन्यासेन ? पुराणपत्रमपेक्ष्य नो नवपल्लवः समुल्लसति । न च तरुणग्रन्थिवलयकाण्डकवलन-लुब्धो गन्धहरिणो दमनकवेदारिकायामभिरमति ।

---

न्यचरणं विघ्नं न सहते न चानुबध्यते इत्यर्थः । आज्ञा पर्युषिता अपि केसरस्रक् बकुलमाला न हि मोच्या त्याज्या, तथा देवी कथञ्चित् कथ-मपि न खण्ड्यः खण्डनीयः प्रणयो यस्याः तादृशी । नवीनानुरागेन मया देवीप्रेम न कदापि विस्मरणीयमिति भावः ।

(न) दाक्षिण्यवचनोपन्यासेन दक्षिणः तदाख्यनायकः । तदुक्तं दर्पणे । तत्र अनेकासु समरागो दक्षिणः कथित इति । तस्य इदं दाक्षिण्यं तत् वचनं दाक्षिण्यवचनं तस्योपन्यासेन कीर्त्तनेन । पुराण-पत्रम् अङ्कुरीकृत्य अनिराकृत्य इत्यर्थः । तरुणग्रन्थिवलयकाण्डकवलन-लुब्धः तरुणः अभिनवः यः ग्रन्थिपर्ववलय तद्विशेषक अङ्कुरकः तस्य वदने भक्षणे लुब्धः गन्धहरिणः कस्तूरीमृगः गन्धप्रिय-मृगो वा ।

असि, मा समाधिभंगं मे कुण, देवीपुरदो मेहला जीवइ-दव्वा ( १ ) ।

( ततः प्रविशति देवी प्रयता च मेखला विभवतश्च परिवारः । )

देवी । हला सुलक्खणे ! अपि संणिहिदो अंतेउरदुवा-रप्पग्गीवे ( प ) अज्जउत्तो चाराअणबम्हणो अ ( २ ) ।

सुलक्षणा । किं अस्सधा देवी विस्सवीअदि ? ( ३ ) ।

विदूषकः । एदं प्पग्गीवं ता उअविसदु प्पिअवअस्सो (४) ।

( तथा कुरुतः ) ।

देवी । जअदु जअदु अज्जउत्तो अज्जचाराअण ! देसु मे धत्तेइआं ( फ ) भिक्खां जीआवेसु मेहलअं ( ५ ) ।

विदूषकः । एस सज्जो म्हि ( ६ ) ।

---

( १ ) किं मम परकीयया चिन्तया तद् भणसि, मा समाधि-भङ्गं मे कुरु देवीपुरतो मेखला जीवयितव्या ।

( २ ) हला सुलक्षणे ! अपि संनिहितोऽन्तःपुरद्वारप्रग्रीवे आर्य्य-पुत्रश्चारायणब्राह्मणश्च ।

( ३ ) किमन्यथा देवी विश्वास्यते ?

( ४ ) एतत् प्रग्रीवं तदुपविशतु प्रियवयस्यः ।

( ५ ) जयतु जयतु आर्य्यपुत्रः । आर्य्य चारायण ! देहि मे धात्रे-यिकां भिक्षां, जीवय मेखलाम् ।

( ६ ) एष सज्जोऽस्मि ।

---

(प) अन्तःपुरद्वारप्रग्रीवे अन्तःपुरद्वारस्य उपान्तप्रदेशे ।

(फ) धात्रेयिकां धात्री उपमाता, प्रसूतमात्रेण या धरतीत्यर्थः तस्या अपत्यं स्त्री धात्रेयिका ताम् उपमातृदुहितरमित्यर्थः ।

मेखला । ( बद्धाञ्जलिः ) अज्ज चाराअण ! अअं जणो तुमं महाबह्मणं सरणं पड़िवज्जदि ( १ ) । ( इति पादौ शिरस्यारोपयति ) ।

नेपथ्ये । कहिं कहिं सा दुट्ठदासी एदे अम्हे कालपुरिसा सिंखलाहिं गले बाढ़ं बंधिअ मेहलं णेदुमाअदा ( २ ) ।

विदूषकः । ( बहुविधं दण्डकाष्ठमुद्यम्य ) जइ अहं पिङ्गलिआवल्लहो गन्धव्ववेअविअक्खणो रक्खको चिट्ठामि । ता को कालो के कालपुरिसा का वा कालसिंखला (३) । ( इति बहुविधं वल्गति ) ( ब ) ।

मेखला । (पादयोरन्तरे प्रविशति) भो ! परित्ताअसु मं ( ४ ) ।

विदूषकः । ( उच्चैर्गायत्रपवार्य्य ) भो पेक्ख पेक्ख महाराअ ! विलासिणीमम्महरहाहिरूढं अत्तणो पिअवअस्सं । ( किञ्चिदुच्चैः ) भो पेक्खध बह्मणत्तणं जेण खलखलायिदसिंखला कालपुरिसा पणट्ठा ( ५ ) ।

---

(१) आर्य्य ! चारायण ! अयं जनस्त्वां महाब्राह्मणं शरणं प्रतिपद्यते ।

( २ ) कुत्र कुत्र सा दुष्टदासी, एते वयं कालपुरुषाः शृङ्खलाभिर्गले गाढ़ं बद्धा मेखलां नेतुमागताः ।

( ३ ) यद्यहं पिङ्गलिकावल्लभो गान्धर्ववेदविचक्षणो रक्षकस्तिष्ठामि । तत् कः कालः के कालपुरुषाः का वा कालशृङ्खलाः ।

(४) भोः परित्रायस्व माम् ।

(५) भोः प्रेक्षस्व प्रेक्षस्व महाराज ! विलासिनीमन्मथरथाधिरूढ़मात्मनः

---

(ब) वल्गति सोल्लम्फं परिक्रामति ।

मेखला। अम्महे! जीविदम्हि (१)

विदूषकः। (सास्फोटं (अ) विहस्य) आः दासीए धीए! अलीअविवाहविड़म्बिदो दुक्कुदो (ब) णिवड़िदो दे चाराअणबह्मणो संपदमेत्तिकं आसंसे दीहसमग्गकंकणा भोदु मे बह्मणी (२)।

मेखला। (विलक्षा रोदिति)।

देवी। अज्जउत्त! जुत्तं णेमं सरिसं णेमं जं दाणीं मे पिअसहि मेहला एवं विड़ंबीअदि? (३)।

विदूषकः। भोदीए जुत्तं णेमं सरिसं णेमं जं महाराअपिअवअस्सो तधा विड़ंबीअदि (य) (४)।

---

प्रियवयस्यम्। भोः प्रेक्षत मे आत्मपत्नं येन खलखलायितहस्ताः कालपुरुषाः प्रनष्टाः।

(१) आश्चर्य! जीवितास्मि।

(२) आः दास्याः दुहितः! अलीकविवाहविड़म्बितो दुःक्रुष्टो निपतितस्ते चारायणब्राह्मणस्तूष्णीमतमेतावदाशंसे, दीर्घसमग्रकङ्कणा भवतु भवतु मे ब्राह्मणीति।

(३) आर्यपुत्र! युक्तमेतत् सदृशमेतद्यदिदानीं मे प्रियसखी मेखला एवं विडम्ब्यते?

(४) भवत्या युक्तमेतत् सदृशमेतद्यन्महाराजप्रियवयस्यस्तथा विड़म्ब्यते?

---

(अ) सास्फोटं बाहुास्फोटनं कृत्वा इत्यर्थः।

(ब) दुःक्रुष्टः अतिक्रुष्टः। आशंसे प्रार्थये, दीर्घसमग्रकङ्कणा दीर्घं प्रचुरं समग्रं सम्पूर्णं कङ्कणम् अलङ्कारविशेषः यस्याः तादृशी। विवाहा वर्ण्णिता अप्रतिभा वा।

(य) विड़म्ब्यते प्रताय्यते।

देवी। अज्जस्स संबंधिओ (र) त्ति मए सह एदाए वक्करं किदं (१)।

विदूषकः। संबंधिणी त्ति मए वि वक्करं किदं (२)।

मेखला। देवी सक्कीअदि उत्तरं दादुं। पराजेदु एसो, महाराओ एदस्स गुरू। केअइकुसुमवासिदस्स खदिरसारस्स वि अण्णो गंधुग्गारो (३)।

देवी। (कोपनाटितकेन सपरिवारा निष्क्रान्ता)।

विदूषकः। (पार्श्वमवलोक्य) संपदं णिम्मक्खिअं (व) मे पिअवअस्सस्स (४)।

राजा। अतिविलक्षणा देवी यतो रुदती गता।

विदूषकः। रुदंतु रुदंतु किं स्सो मोतिआओ गलि-

---

(१) आर्यस्य सम्बन्धीति त्वया सहैतया वक्रं कृतम्।

(२) सम्बन्धिनीति मयापि वक्रं कृतम्।

(३) देवी शक्यते उत्तरं दातुम्। पराजयत्येष, महाराज एतस्य गुरुः, केतकीकुसुमवासितस्य खदिरसारस्याप्यन्यो गन्धोद्गारः।

(४) साम्प्रतं निर्मक्षिकं मे प्रियवयस्यस्य।

---

(र) सम्बन्धी सखा। वक्रं कौटिल्यं परिहासो वा।

(ल) पराजयतु विजयी भवतु। अन्यो गन्धोद्गारः अन्यप्रकारो गन्धनिर्गमः महतः संसर्गेण एतस्य महत्त्वात् नायम् उत्तरेण पराजेय इति भावः।

(व) निर्मक्षिकं मक्षिकाभावः निर्मक्षिकं प्रियवयस्यस्य विघ्नोत्पादिकापि नास्तीत्यर्थः।

क्खंति तो इदो उज्जाणाहिमुहं एदु पिअवअस्सो (१।)
(इति परिक्रामतः)।

विदूषकः। भो मह करे ठाविदपाणी (अ) मसिणणिवेसिदपादमुद्दो संचरदो बहलालिपडलणिम्मिदं व कोइलकुलकलिदजम्मेव तेलमंजिदकज्जलपुंजसंजणिदं व इंदणीलचुस्ससंभूदं व सिंदिकण्ठकण्ठसंघड़िदं व णाराअणतणुविणिग्गदं व मिअंककलंकणिक्कालिदं व कुवलअदलपरिकप्पिदं व करिदाणप्पवित्तं व तिमिरचक्कवालं अविसादसमविसमं अणिसीदसामधवलं अपरिच्छिसलहुदीहं अणधिगददूरसंणिहिदं भुअणगब्भक्कमणं करेदि (२)।

---

(१) रुदन्तु रुदन्तु किमत्र मौक्तिकानि गलिष्यन्ति। तदित उद्यानाभिमुखमेतु प्रियवयस्यः।

(२) भोः! मम करे स्थापितपाणिर्मसृणनिवेशितपादमुद्रः सञ्चरतो बहुलालिपटलनिर्मितमिव कोकिलकुलकलितजन्मेव तैलमार्जितकज्जलपुञ्जसञ्जनितमिव इन्द्रनीलचूर्णसंभृतमिव शितिकण्ठकण्ठसंघटितमिव नारायणतनुविनिर्गतमिव मृगाङ्ककलङ्कनिष्काशितमिव कुवलयदलपरिकल्पितमिव करिदानप्रवृत्तमिव तिमिरचक्रवालमविभातसमविषमनिशीथश्यामधवलमपरिच्छिन्नलघुदीर्घमनधिगतदूरसन्निहितं भुवनगर्भाक्रमणं करोति।

---

(अ) मम करे संस्थापितः पाणिर्येन तद्वत् मसृणं मृदु यथा तथा निवेशिता विन्यस्ता पादमुद्रा चरणक्षेपो यस्मिन् तद् यथा तथा सञ्चरतः विचरतः तव इति शेषः। बहुलालिपटलनिर्यामितं बहुलैरलिपटलैः भ्रमरवृन्दैः निर्मापितमिव जनितमिव। कोकिलकुलैः कलितं गृहीतं जन्म यस्य तादृशमिव। शितिकण्ठस्य हरस्य कण्ठेन सङ्घटित-

राजा । एवमेतत् ।

तनुलग्ना इव ककुभः क्ष्मावलयं चरणचारपार्श्वमिव ।

वियदपि चालिकदम्नं मुष्टिग्राह्यं तमः कुरुते ॥ ६ ॥

( किञ्चित्तर्कयामि ) —

उत्तंसः केकिपिच्छैर्मरकतवलयैः श्यामलैर्दोःप्रकाण्डे

हारः सान्द्रेन्द्रनीलैर्मृगमदरचितो वक्षसि पत्रप्रपञ्चः ।

नीलाब्जैः शेखरश्रीरसितवसनता चेत्यभीकाभिसारे

संप्रत्येणीदृशानां तिमिरभरसखी वर्तते वेषलीला ॥ ७ ॥

---

मिव रचितमिव । नारायणस्य तन्वाः शरीरात् विनिर्गतमिव कृष्णत्वादिति भावः । कुवलयदलैः नीलोत्पलपलाशैः परिकल्पितमिव । रचितमिव करिदानप्रवृत्तमिव हस्तिमदजलसञ्जातमिव । तिमिरचक्रवालं तमःपुञ्जं भुवनस्य जगतः गर्भ एव अङ्कुरम्(?) अजिरं तत् अविज्ञातं वर्णविभङ्गो यस्य तत्, अनिर्णीतौ श्यामधवलौ प्रदेशाविति शेषः यस्य तत्, अपरिच्छिन्ने लघुदीर्घे यस्य तथोक्तं तथा अनधिगतम् अज्ञातं दूरं सन्निहितञ्च यस्य तादृशं करोति ।

(७) उत्तंस इति । साम्प्रतम् एणीदृशानां मृगनयनानाम् अभीकाभिसारे कान्ताभिगमने सङ्केतस्थानगमने इत्यर्थः वेषलीला वेशस्य परिच्छदस्य लीला विलासः रचना इत्यर्थः तिमिराणां भरः समूहः तस्य सखी सङ्गिनी अनुरूपा इत्यर्थः वर्तते, तथाहि केकिनां मयूराणां पिच्छैः बर्हैः उत्तंसः कर्णभूषणं, श्यामलैः मरकतवलयैः दोःप्रकाण्डे, हस्ताभरणे, सान्द्रैः घनैः इन्द्रनीलैः नीलकान्तैः हारः, वक्षसि पत्रप्रपञ्चः पत्ररचना मृगमदरचितः कस्तूरीविरचितः, नीलाब्जैः नीलकमलैः शेखरश्रीः शिरोभूषणं तथा असितवसनता नीलवसनत्वम् इति । [illegible] ।

( नेपथ्ये )

आवट्टिअदुद्धमुद्धकरतलिअजलणिहिसलिलसंचओ
तिहुवणभवणवलअविप्फुरणसुहारसधवलणकुच्चओ ।
चंदो मअणवल्लिपल्लवणमहोसहिसरिसजोण्हओ
जअइ अणंगकेलिभवणंगणचन्दणपंकचच्चओ ॥ ८ ॥

अपि च । जणाणंदो चंदो हसइ मलिणी होइ णलिणी
विसट्टन्ते तारा रअणिसिरिहारा दिसि दिसि ।

---

आवर्त्तितदुग्धमुग्धकरतरलितजलनिधिसलिलसञ्चयः
त्रिभुवनभवनवलयविस्फुरणसुधारसधवलनकूर्चकः ।
चन्द्रो मदनवल्लिपल्लवनमहौषधिसदृशज्योत्स्नः
जयत्यनङ्गकेलिभवनाङ्गणचन्दनपङ्कचर्चकः ॥ ८ ॥
जनानन्दश्चन्द्रो हसति, मलिनी भवति नलिनी
विकसन्ति तारा रजनीश्रीहारा दिशि दिशि ।

---

(८) आवर्त्तितेति । आवर्त्तितानि वह्निसन्तापेन घनीभूतानि यानि दुग्धानि तद्वत् मुग्धाः चारवः ये कराः किरणाः तैः तरलितः उद्वेलितः जलनिधेः समुद्रस्य सलिलसञ्चयः जलराशिः येन तथोक्तः, त्रिभुवनमेव भवनवलयं गृहमण्डली तस्य विस्फुरणात् विलेपनाय यः सुधारसः चूर्णसलिलं तेन यत् धवलनं श्वेतीकरणं तस्य कूर्चकः कूर्चीति प्रसिद्धा लेपनवर्त्तिका, मदन एव वल्लिर्लता तस्याः पल्लवने विस्तारे वर्द्धने इत्यर्थः या महौषधिः तत्सदृशी ज्योत्स्ना चन्द्रिका यस्य तथाभूतः तथा अनङ्गस्य मदनस्य यत् केलिभवनं क्रीडामन्दिरं तस्य यत् अङ्गणम् अजिरं तस्य चन्दनपङ्कचर्चकः चन्दनरसविलेपनः चन्द्रः जयति शोभते ।

(९) जनानन्द इति । जनानाम् आनन्दः आनन्दवर्द्धनः चन्द्रः हसति विराजते, नलिनी पद्मिनी मलिनी भवति, रजनीश्रियः रात्रि-

रहंगा दड्ढंगा विरहसिहिणा दड्ढविहिणा
इमे दुक्खक्कंता ससिअरकिलंता विहडिदा ॥ ९ ॥

( पुनर्नेपथ्ये )

ये पूर्वं यवसूचिसूत्रसुहृदो ये केतकाग्रच्छद-
च्छायासाम्यभृतो मृणाललतिकालावण्यभाजोऽत्र ये ।
ये धाराम्बुविडम्बिनः क्षणमथो ये तारहारश्रिय-
स्तेऽमी स्फाटिकदण्डडम्बरजितो जाताः सुधांशोः कराः ॥१०॥

अपि च, सद्यश्चन्दनपङ्कपिच्छिलमिव व्योमाङ्गणं कल्पयन्
पश्यैरावतकान्तदन्तमुसलच्छेदोपमेयाकृतिः ।

---

रथाङ्गा दग्धाङ्गा विरहाग्निशिखिना दग्धविधिना
इमे दुःखक्रान्ताः शशिकरकीलिता विघटिताः ॥ ९ ॥

---

लब्धाग्राः हारा हाररूपाः तारा नक्षत्ररूपाः दिशि दिशि विकसन्त । तथा रथाङ्गाः चक्रवाकाः दग्धविधिना हतदैवेन विरहशिखिना विच्छेदानलेन दग्धानि अङ्गानि येषां तथाभूताः, किं बहुना, विघटिताः प्रियविरहिता इमे कोकाः शशिकरैः कीलिताः निपीडिताः दुःखक्रान्ता दुःखाभिभूताः ।

(१०) ये इति । अत्र जगति ये पूर्वं प्रथमं यवानां धान्यविशेषाणां सूचयः अग्राणीव सूत्राणि तन्तवः तेषां सुहृदः सदृशाः, ये केतकानां ये अग्रच्छदा अग्रपत्राणि तेषां या छाया कान्तिः तस्याः साम्यभृतः समानाः ये मृणाललतिकानां यत् लावण्यं श्रीः तद्भाजः, ये क्षणं धाराम्बूनि विडम्बन्ते अनुकुर्वन्तीति तादृशाः, अथो अनन्तरं ये तारहारस्य महतः हारस्य श्रीरिव श्रीर्येषां तथाभूताः, ते अमी सुधांशोः कराः किरणाः स्फाटिकदण्डानां स्फटिकनिर्मितयष्टीनां डम्बरं शोभां जयन्तीति तथाभूताः जाताः क्रमशः परिवर्द्धन्ते इति भावः । शार्दूलविक्रीडितं वृत्तम् ।

उद्गच्छत्ययमच्छमौक्तिकलताप्रालम्बलम्बैः करै-
र्मुग्धानां स्मरलेखवाचनकलाकेलिप्रदीपः शशी ॥९१॥

विदूषकः । एसा कलकण्ठी णाम देवी णअरिणी (ष) ताए वअणादो पुण्णिमाचंदोदयं कप्पूरचंदणामधेयो मागधो अहिणंदेदि मिअंकुज्जोतलच्छिं, ता ममापि वड्ढदि तुंडकंडू: अहं पि वण्णिस्सं ससिवोलआहिं ढलिओ जोण्हाखडिआरसो मसीकुणइ णक्खत्तक्खरमालं णहफलए तिमिरकज्जलिए (१) ।

---

(१) एषा भोः कलकण्ठी नाम देवी नागरिकी तस्या वचनात् पूर्णिमाचन्द्रोदये कर्पूरचन्द्रनामधेयो मागधोऽभिनन्दयति मृगाङ्कोद्योतलक्ष्मीं, तत् ममापि वर्धते तुण्डकण्डुः अहमपि वर्णयिष्ये शशिमणीपालात् स्यन्दिनी ज्योत्स्नाखटिकारसो मषीकरोति नक्षत्रमालां नभःफलके तिमिरकज्जलिते ।

---

(९१) पश्य इति । पश्य अवलोकय अयं शशी चन्द्रः व्योम चाकाशमेव चषकं पात्रं सहसा चन्दनपङ्केन चन्दनरसेन पिच्छिलमिव कलयन् कुर्वन्, ऐरावतस्य कान्तं यत् दन्तयुगलं मुसलाकृतिदशनं तस्य छेदेन खण्डेन उपमेया आकृतिर्यस्य तादृशः, अच्छा निर्मलाः मौक्तिकलता इव ये प्रालम्बा हाराः ते इव लम्बन्ते इति तथोक्ताः तैः करैः मुग्धानां सुन्दरीणां स्मरलेखस्य कामलेखस्य कामप्रेरितस्य इति भावः वाचनकलायां पठनविधौ केलिदीपः क्रीडाप्रदीपः सन् उद्गच्छति उदेति । शार्दूलविक्रीडितं वृत्तम् ।

(ष) नागरिणी नगरवासिनी । मृगाङ्केन मृगचिह्नेन उद्द्योतिता लक्ष्मीः तादृशं चन्द्रोदयस्य विशेषणमेतत् । तुण्डकण्डुः तुण्डस्य मुखस्य कण्डुः (चुलकुनीति भाषा) । शशिमणीपालात् शशिन एव

राजा। (समन्तादवलोक्य मदनाकूतमभिनीय)
भगवन् यामिनीनाथ! कस्तवायं विरुद्धो विधिः (च)?

सूतिर्दुग्धसमुद्रतो भगवतः श्री-कौस्तुभौ सोदरौ
सौहार्दं कुमुदाकरेषु किरणाः पीयूषधाराकिरः।
स्पर्धा ते वदनाम्बुजैर्मृगदृशां तत् स्थाणुचूड़ामणे!
हंहो चन्द्र! कथं नु सिञ्चसि मयि ज्वालामुचो रोचिषः॥१३॥

अपि च, यन्त्रद्रावितकेतकोदरदलस्रोतःश्रियं बिभ्रती
येयं मौक्तिकदामगुम्फनविधेर्योग्यच्छविः प्रागभूत्।
उत्सेच्या कलसीभिरञ्जलिपुटैर्ग्राह्या मृणालाङ्कुरैः
पातव्या च शशिन्यमुग्धविभवे सा चन्द्रिका वर्त्तते॥१४॥

---

अयोनयम् असोढ़मं शोषणमोहनातिरिक्तं मकरन्दाङ्कनस्य कामस्य आयुधम् अस्त्रं मृगाङ्ककिरणावली चन्द्रकिरणजालं नभस्तलेऽपि पुञ्जायते रागोभवति।

(च) विरुद्धः विपरीतः विधिः आचरणम्।

(१३) सूतिरिति। हंहो स्थाणुचूड़ामणे हरशिरोमणे चन्द्र! भगवतः सर्वशक्तिमतः ते तव दुग्धसमुद्रतः क्षीरसागरात् सूतिः उद्भवः महाकुलप्रसूतोऽसीति भावः, श्रीर्लक्ष्मीः कौस्तुभः मणिविशेषश्च (यो नारायणेन वक्षसि विधृतः) सोदरौ सोदरा सोदरश्च। कुमुदाकरेषु कुमुदसरःसु सौहार्दं सख्यं किरणाः पीयूषधाराकिरः अमृतधारावर्षिणः तथा मृगदृशां सुन्दरीणां वदनान्येव अम्बुजानि तैः स्पर्द्धा प्रतिपक्षता तत् तदा मयि ज्वालामुचः अग्निशिखावर्षिणीः रोचिषः शिखाः कथं सिञ्चसि नु? नु प्रश्ने। एतादृशस्य महात्मनस्ते नृपपीड़नं नोचितमिति भावः। शार्दूलविक्रीड़ितं वृत्तम्।

(१४) यन्त्रेति। या इयं चन्द्रिका प्राक् यन्त्रेण द्राविताऽपि इन्दी-

(विभाव्य) वैमत्यमेव (क) वा शशलक्ष्मणो मादृग्जन-प्राणसन्देहहेतुः वैषद्यमेव वा विषमं विषस्य (चतुर्दिशमवलोक्य साभ्यर्थनम्)

अयि पिबत चकोराः! कृत्स्नमुन्नाम्य कण्ठं
क्रमकवलनचञ्चच्चञ्चवश्चन्द्रिकाम्भः।
विरहविधुरितानां जीवितत्राणहेतो-
र्भवति हरिणलक्ष्मा येन तेजोदरिद्रः॥ १५॥

(पुरोऽवलोक्य) सैवेयं मृगाङ्कावली।

---

छतानि यानि केतकानां केतकीकुसुमानाम् उदरदलानि अभ्यन्तरपर्णानि तेषां स्रोतसः प्रवाहस्य श्रियं कान्तिं बिभ्रती धारयन्ती सती मौक्तिकदाम्नां मुक्ताहाराणां गुम्फनविधेः ग्रन्थनविधानस्य योग्या सदृशी छविः कान्तिर्यस्य तादृशी अभूत् सा इदानीं शशिनि चन्द्रे अस्तगतविभवे प्रौढ़तां गते इत्यर्थः कलशीभिः उपसेव्या उपसेवनीया, अञ्जलिपुटैः ग्राह्या ग्रहीतुं शक्या तथा मृणालाङ्कुरैः पातव्या च वर्त्तते, क्रमशः परिवर्द्धनादिति भावः। शार्दूलविक्रीडितं वृत्तम्।

(क) वैमत्यं विमतिः विरुद्धमतित्वमित्यर्थः। वैषद्यं स्वच्छता विषं यथा यथा स्वच्छं तथा तथा विषमं तद्वत् चन्द्रो यथा यथा विशदः तथा तथा नितरां दाहकः। निर्मलचन्द्रस्य अत्यन्तोद्दीपकत्वादिति भावः।

(१५) अयीति। अयि भोः चकोराः! क्रमेण यत् कवलनं ग्रासः पानमित्यर्थः तेन चञ्चन्त्यः स्फुरन्त्यः चञ्चवः येषां तादृशा यूयं कण्ठम् उन्नाम्य उत्क्षिप्य कृत्स्नं समस्तं चन्द्रिकाम्भः चन्द्रकिरणरूपं जलं विरहविधुरितानां विच्छेदार्त्तानां जीवितस्य त्राणहेतोः रक्षणार्थं पिबत, येन हरिणलक्ष्मा मृगाङ्कः तेजसा दरिद्रः निस्तेजा भवति। मालिनीवृत्तम्।

विदूषकः । भो मिअंकावलि ज्जेव एसा, णहु एक्क-चन्दस्स एत्तिओ कंतिवित्थारी ( १ ) ।

राजा । ततः कदलीलतान्तरितावेव शृणुवस्तावदस्या विस्रम्भजल्पितानि ( ख ) । आहृत्य पिबेतां श्रवसी रसायनम् ( तथा कुरुतः ) ।

( ततः प्रविशति मृगाङ्कावली विचक्षणा च । )

मृगाङ्कावली । ( अनुध्याननाटितकेन ( ग ) तदेव पठति । )

राजा । ( सखेदम् ) अहो मदनमन्त्राक्षराणि सुभाषितवचनान्यस्याः ।

विदूषकः । अहं उण जाणे णिसिदाणि ( घ ) हदमअणस्स हत्थभल्लाणि ( २ ) ।

राजा । कण्ठे मौक्तिकमालिकाः स्तनतटे कार्पूरमच्छं रजः सान्द्रं चन्दनमङ्गके वलयिताः पाणौ मृणालीलताः ।

---

( १ ) भोः मृगाङ्कावल्येवैषा, न खलु एकचन्द्रस्य एतावान् कान्तिविस्तारः ।

( २ ) अहं पुनर्जाने निशितानि हतमदनस्य हस्तभल्लानि ।

---

( ख ) विस्रम्भजल्पितानि विश्वासवचनानि प्रणयभाषितानि वा । आहृत्य तृप्तिपर्य्यन्तं श्रवसी कर्णौ रसायनं रसनिलयं वचनमिति शेषः पिबेतां सातिशयं शृणुतामिति यावत् ।

( ग ) अनुध्याननाटितकेन अनुचिन्तनाभिनयेन ।

( घ ) निशितानि तीक्ष्णानि हस्तभल्लानि करास्त्रभल्लाख्यास्त्राणि ।

( १६ ) कण्ठे इति । इयं तन्वी कृशाङ्गी कण्ठे गले मौक्ति-

तन्वी नक्तमियं चकास्ति तनुनी चीनांशुके बिभ्रती
शीतांशोरधिदेवतेव गलिता व्योमाग्रमारोहतः ॥ १६ ॥

विदूषकः। भो सच्चकं ज्जेव चंदाधिदेवता ज्जेव एसा गलिदा। तदो लंच्छणच्छलेण मिअलंछणस्स इमीअ अइ-रपरिचत्तं सिणाणमलिणं व मंडलमज्झं णिज्झाअदी (ङ) दीसदि (१)।

राजा। सखे! मांसलतां दधत्यपि चन्द्रिकोद्योतते। अतिरिच्यत इवास्याः स्मरजन्मा पाण्डिमा। विभाव्यत एव (च) वा ग्रहशुक्तियुक्ताऽपि मुक्तावली। तथाहि—

दरदलितहरिद्राग्रन्थिगौरे शरीरे
स्फुरति विरहजन्मा कोऽप्ययं पाण्डुभावः।

---

(१) भो सत्यकमेव चन्द्राधिदेवतैवैषा गलिता। ततो लाञ्छनच्छलेन मृगलाञ्छनस्यानया अचिरपरित्यक्तं स्नानमलिनमिव मण्डलमध्यं निध्यायन्ती दृश्यते।

---

कानां मालिकाः स्रजः, स्तनतटे स्वच्छं निर्मलं कार्पूरं कर्पूरस्य इदं रजः परागं कर्पूरचूर्णमित्यर्थः, अङ्गके गात्रे सान्द्रं घनं चन्दनं, पाणौ वलयिता वलयाकारेण वेष्टिताः मृणालीलताः, तथा तनुनी सूक्ष्मे चीनांशुके बिभ्रती दधती सती नक्तं रात्रौ व्योमाग्रं गगनाग्रम् आरोहतः शीतांशोः गलिता आरोहणवेगात् प्रच्युता अधिदेवता अधिष्ठात्री देवीव चकास्ति विराजते। उत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम्।

(ङ) णिज्झाअन्ती चिन्तयन्ती।

(च) मांसलतां परिपुष्टताम्। स्मरजन्मा कामजनितः पाण्डिमा पाण्डुत्वम्। विभाव्यते अनुमीयते एव।

बलति सति यस्मिन् सार्द्धमावर्त्त्य हेम्ना
रजतमिव मृगाच्याः कल्पितान्यङ्गकानि ॥ १७ ॥

विदूषकः। पारअरसचुम्बिअं व सुवस्सं से लावस्सं। कमक्कंत (क) गोरत्तणेण पडिवरिदा पंडुभावेण (१)।

मृगाङ्कावली। हंहो हिअअणअणेहिं दिट्ठो तुमं उत्तमसि त्ति अहो अच्चरिअं। अहवा मूले वउलयट्ठीए सुराअगंडुसेओ कुसुमेसु मइराअंधुग्गारो त्ति (२)।

विदूषकः। किं कारणम् ?

राजा। इदं हि कारणान्तरसरागं हृदयमस्याः स्वेनैव हृदयेन कलहायते।

मृगाङ्कावली। अइ कप्पूरसलाआसिसिर विज्जाहर-मल्ल! तुमं पि तमसि त्ति कधं मे णिव्वुदि। चन्दमणी सुअवहं णीसंददि त्ति को वा पडीआरो (३)।

---

(१) पारदरसचुम्बितमिव सुवर्णमस्या लावण्यम् क्रमाक्रान्ता गौरत्वेन परिवारिता पाण्डुभावेन।

(२) हंहो हृदय-नयनाभ्यां दृष्टस्त्वमुत्तमस्यसीत्याश्चर्यम्। अथवा मूले बकुलयष्ट्याः सुरागण्डूषसेकः कुसुमेषु मदिरागन्धोद्गार इति।

(३) अयि कर्पूरशलाकाशिशिर विद्याधरमल्ल! त्वमपि ताम्य-

---

(१७) दरेति। दरदलितः ईषत् स्फाटितः यः हरिद्राग्रन्थिः तद्वत् गौरे शरीरे विरहजन्मा कोऽपि अनिर्वचनीयः पाण्डुभावः स्फुरति विकाशते, यस्मिन् पाण्डुभावे बलति बलं प्रकाशयति सति हेम्ना काञ्चनेन सार्द्धं रजतम् आवर्त्त्य द्रवीकृत्य अस्याः मृगाच्याः अङ्गकानि कल्पितानि नु, नुशब्दो वितर्के। मालिनीवृत्तम्।

(क) क्रमाक्रान्ता क्रमेण आक्रान्ता।

राजा। नमो मह्यं मृगाङ्कावलीचतुरोपालम्भपात्री-कृताय।

मृगाङ्कावली। सहि! सामग्गकुसुमबाणो भविअ कधं एआरिसदसं जणं करेदि मअणो? ता णूणं से विसकुसुम-मआ बाणा (१)।

राजा। सलिलरूपा दहति हिमानी। कुसुममय्यपि स्वभावचण्डा मदनपञ्चशरी (ज)।

विदूषकः। भो वअस्स! वस्सारिदुसक्करपुत्तलिअ विअ खणे खणे झिज्जंती एसा कं ण दुणेदि, (झ) किं उण मिलाणा वि मरुवककंदली सुअंधा विरहपरिक्खामा वि अइरम-णिज्जा। (किञ्च) कोरंडकुसुममाल व मिलाअमाणा वि सुट्ठु क्खु रत्तत्तणं दंसेदि (२)।

---

धीति कथं मे निर्वृतिः। चन्द्रमणिर्घृतवद् निष्यन्दत इति को वा प्रतीकारः।

(१) सखि! सामग्र्यकुसुमबाणो भूत्वा कथमेतादृशदशं जनं करोति मदनः? तन्नूनमस्य विषकुसुममया बाणाः।

(२) भो वयस्य! वर्षर्तुशर्करापुत्तलिकेव क्षणे क्षणे क्षीयमा-णैषा कं न दुनोति किं पुनर्म्लानाऽपि मरुवककन्दली सुगन्धा विरह-

---

(ज) सलिलरूपा सलिलमयी हिमानी हिमसंहतिः। मदनप-ञ्चशरी पञ्चानां शराणां समाहारः पञ्चशरी मदनस्य पञ्चशरी मदनपञ्चशरी।

(झ) दुनोति तापयति, सर्वमेव दुनोतीत्यर्थः एतस्या एता-दवस्थां दृष्ट्वा सर्व एव परितप्यते इति भावः।

मृगाङ्कावली । सहि ! अहवा किं करीअदु दुच्छेज्जा पेम्मदुद्दोणी । ( सखेदम् ) सहि ! णिरणुक्कोसो क्खु सो, विरलो वा परदुक्खदुक्खिदो जणो, थोआ णवपंचमझङ्कारा मुक्ककुसुमपीडविडंबिणो, ( सप्रश्रयम् ) अइ तिहुअणेक्कधणु-क्क मम्मह ! मिअंकचूडामणिं परिक्खिविअ तिक्खत्तणेहिं सरेहिं महिलाअणं विग्गहअंतो ण लज्जसि? जाणामि जत् तस्सिं पि जणे इमे अ आरभडीचंडो (अ) होसि ( १ ) ।

---

परिणामेऽपि अतिरमणीया । कुरण्टककुसुममालेव म्लायमानाऽपि पुनः खलु रक्तत्वं दर्शयति ।

( १ ) सखि ! अथवा किं क्रियतां दुश्छेद्या प्रेमदुर्द्रोणी । सखि ! निरनुक्रोशः खलु सः, विरलो वा परदुःखदुःखितो जनः, स्तोका नव-पञ्चमझङ्कारा मुक्तकुसुमोत्पीडविडम्बिनः । अयि त्रिभुवनैकधानुष्क मन्मथ ! मृगाङ्कचूडामणिं परिक्षिप्य तीक्ष्णैः शरैर्महिलाजनं विग्रह-यन् न लज्जसे ? जानामि यदि तस्मिन्नपि जने एवमेवारभटीचण्डो भवसि ।

---

( अ ) प्रेमदुर्द्रोणी प्रेम एव दुष्टा दुरारोहत्वादिति भावः द्रोणी एककाष्ठमयी नौः ( डोङ्गा ) यथा तत्र आरोहणे कष्टं तथा प्रेमाश्रयेऽपि, यथा तस्मादुद्धृत्य अवतरणमपि पतनसङ्कुलं कष्टं तथा प्रेमविच्छेदोऽपि कष्ट इत्यतस्तस्या दुश्छेद्यत्वमिति भावः । निरनुक्रोशः निर्दयः । विरलः अल्पः, न हि सर्वो जनः परदुःखेन दुःखितो भव-तीत्यर्थः । नवपञ्चमझङ्काराः नवः पञ्चमः स्वरः येषां तेषां कोकिलानां झङ्काराः निनादाः स्तोकाः अल्पाः, किन्तु मुक्तान् प्रक्षिप्तान् कुसुमोत्-पीडान् पुष्पोत्करान् विडम्बन्ति अनुकुर्वन्तीति तथोक्ताः पुष्पप्रकर-क्षेपणस्येव कोकिलनिनादस्य अल्पत्वेऽपि मनोहारित्वात् अपहार्यत्वमिति

विदूषकः। अणंगस्स पि आरभडि त्ति महाहासो (ट) मे (१)।

राजा। किमिदमुच्चैर्हसितेन त्रायसे माम्।

मृगाङ्कावली। सहि विअक्खणे! जणसञ्चारो (ठ) विअ (२)।

विचक्षणा। ता कदलीगुम्मंतरिदे (ड) आणीमो किं णु एदं त्ति (३) (तथा कुरुतः)।

विदूषकः। एहि पविसम्ह (४) (इति परिक्रामितकेन)।

---

(१) अनङ्गस्याप्यारभटीति महाहासो मे।

(२) सखि विचक्षणे! जनसञ्चार इव।

(३) तत्कदलीगुल्मान्तरिते जानीवः किं नु एतदिति।

(४) एहि प्रविशावः।

---

भावः। सप्रश्रयं सविनयम्। त्रिभुवनैकधानुष्क! त्रिभुवने अद्वितीय-धनुर्धर! मृगाङ्कावलीं चन्द्रशेखरं परित्यज्य विहाय निर्जितमन-मथो भूत्वा इति भावः विप्लवयन् विध्यन्। तस्मिन्नपि जने विद्या-धरमल्ले इत्यर्थः। आरभटीप्रपञ्चः आरभटी वस्तुप्रयोगः तत्र प्रपञ्चः सम्प्रपञ्चः।

(ट) अनङ्गस्य अशरीरस्य कामस्य, यस्य शरीरं नास्ति तस्य अप्यारभटीति हास्यावसर इति भावः।

(ठ) जनसञ्चारः जनानां सञ्चारः, जना अत्र सञ्चरन्तीति सम्भा-व्यते इत्यर्थः।

(ड) कदलीगुल्मान्तरिते कदलीलताभिश्छन्नौ आवामिति शेषः।

राजा । (शिशिरोपचारसामग्रीमालोक्य (ढ) नाटीनां-दाय च )

> मृणालमेतद्वलयीकृतं तया
> तदीय एवैष वसन्तपल्लवः ।
> इदं च तस्याः कदलीदलांशुकं
> स पत्त्रसंक्रान्त इव स्मरज्वरः ॥ १८ ॥

तदनया तदुपभुक्तपरित्यक्तया शीतसामग्र्या आत्मानं निर्वापयामि ( तथा करोत्युपविशति च । विदूषकोऽपि यथोचितमुपविशति )।

राजा । अथ वा अपर्यालोचितमाचरितं, (ण) यतः —

> शीतांशुर्विषसोदरः फणभृतां लीलास्पदं चन्दनं
> हारः क्षारपयोभुवः प्रियसुहृत् पङ्केरुहं भास्वतः ।
> इत्येषां किमिवास्तु वस्तु मदनज्वालाविघाताय यद्
> वाह्याकारपरिभ्रमेण तु वयं तत्त्वत्यजो वञ्चिताः ॥१९॥

---

( ढ ) शिशिरोपचारसामग्रीं शीतप्रक्रियोपकरणम् ।

(१८) मृणालमिति । तया मृगाङ्कावल्या एतत् मृणालं वलयीकृतं वलयत्वेन विधृतम्, एष च वसन्तपल्लवः तदीय एव तदुपभुक्त एव, इदञ्च कदलीदलांशुकं रम्भादलरूपम् अंशुकं वसनं तस्याः, स तथाविधः पत्त्रसंक्रान्तः दलसञ्चारितः स्मरज्वरः कामसन्ताप इव । वंशस्थविलं वृत्तं, वदन्ति वंशस्थविलं जतौ जराविति लक्षणात् ।

(ण) अपर्यालोचितम् अविवेचितम् आचरितम् अविविच्य अनुष्ठितमित्यर्थः ।

( १९ ) शीतांशुरिति । शीतांशुश्चन्द्रः विषस्य कालकूटस्य सोदरः सहोदरः उभयोरपि समुद्रजातत्वादिति भावः । चन्दनं फणभृतां

विचक्षणा । सहि मिअङ्कावलि ! फलिदं मे दूदत्तणेण (त) महाराओ वि एआरिसं अवत्थन्तरं उव्वहदि (१) ।

राजा । (सन्तापमभिनीय)

व्यजनमरुतः श्वासश्रेणीमिमामुपचिन्वते
मलयजरसो धारावाष्पं प्रपञ्चयितुं प्रभुः ।
कुसुमशयनं कामास्त्राणां करोति सहायतां
द्विगुणगरिमा कामोन्माथः कथं नु विरंस्यति ॥ २० ॥

---

(१) सखि मृगाङ्कावलि ! फलितं मे दूतीत्वेन महाराजोऽप्येतादृशमवस्थान्तरमुद्वहति ।

---

भुजङ्गानां लीलास्पदं क्रीडास्थानम् । हारः क्षारपयोभुवः लवणजलनिधेर्जात इति शेषः । पङ्केरुहं पद्मं भास्वतः सूर्यस्य प्रियसुहृत्, इत्यस्मात् हेतोः एषां चन्द्रादीनां यद् वस्तु मदनज्वालाविघाताय कामसन्तापशान्तये भवतीति शेषः तत् किमिव वस्तु भवतु न किमपीत्यर्थः, सङ्गदोषेणैवैषां तापकरत्वं विचिन्तयितुमुचितमिति भावः, तु किन्तु वयं बाह्यानाम् आकाराणां शीतत्वादिगुणानां परिभ्रमेण भ्रान्त्या तत्त्वत्यजः तत्त्वं सन्तापकस्वरूपम् आन्तरगुणं त्यजन्तीति तथाभूताः सन्तः वञ्चिताः प्रतारिताः । शार्दूलविक्रीडितं वृत्तम् ।

(त) फलितं मे दूतीत्वेन, मम दौत्यं सफलं जातमित्यर्थः ।

(२०) व्यजनेति । व्यजनमरुतः तालवृन्तवायवः इमां श्वासश्रेणीं निःश्वासपरम्पराम् उपचिन्वते वर्द्धयन्ति, मलयजरसः चन्दनरसः धारावाष्पं वाष्पधारामित्यर्थः प्रपञ्चयितुं विस्तारयितुं प्रभुः समर्थः । कुसुमशयनं पुष्पशय्या कामास्त्राणां सहायतां साहाय्यं करोति, एवं प्रतीकारकल्पनायामपि कामस्य उन्माथः उत्तेजनं द्विगुणः द्विरावृत्तः गरिमा गौरवं यस्य तथाभूतः, अतः कथं नु विरंस्यति विरतो भवि-

विदूषकः । अहो मुद्दासणाहो (च) लेहो विअ (१) ।

राजा । न केवलं लेखः स्मरसम्बन्धि सन्धिविग्रहसम्बन्धश्च, (छ) तथाहि पश्य—

तालीदलं यदकठोरतरं यदत्र
मुद्रा स्तनाङ्कघनचन्दनपङ्कमूर्त्तिः ।
यद्बन्धनं बिसलतातनुतान्तवं च
कस्याश्चिदेष गलितस्तदनङ्गलेखः ॥ २१ ॥

विदूषकः । तीए ज्जेव एसो सण्णिधिपरिच्चाअकारणं (ज) भणिदव्वं (२) ।

---

(१) अहो मुद्रासनाथो लेख इव ।

(२) तस्या एवैष सन्निधिपरित्यागकारणं भणितव्यम् ।

---

ष्यति न कथमपीत्यर्थः । अत्र कामोन्मादयान्त्यर्थनुपाये कल्पितेऽपि न तत्प्रतीकार इति विशेषोक्तिरलङ्कारः । हरिणीवृत्तं, न समरसलागः षड्वेदैर्हयैर्हरिणी मतेति लक्षणात् ।

(च) मुद्रासनाथः समुद्रः मुद्रया अङ्कित इति यावत् ।

(छ) सन्धिविग्रहयोः समोलनवियोगयोः सम्बन्धः समवायः ।

(२१) तालीदलमिति । यत् अकठोरतरं कोमलं तालीदलम् इदमिति शेषः, अत्र तालीदले स्तनाङ्कस्य घनचन्दनपङ्कस्य मूर्त्तिः अवयवः यत्र तादृशी मुद्रा दृश्यत इति शेषः, यच्च बिसलता एव तनु सूक्ष्मं तान्तवं सूत्रं यस्मिन् तादृशं बन्धनम् अस्तीति शेषः, तत् तस्मात् एषः कस्याश्चित् नायिकायाः अनङ्गलेखः गलितः पतितः । वसन्ततिलकं वृत्तम् ।

(ज) सन्निधिपरित्यागकारणं संसर्गत्यागहेतुः ।

राजा । ( विदूषकं कर्णे विधृत्य ) विदूरवसुधैव रत्नग- र्भाकारभूः भवद्वचोवृत्तिरेव (न रसनिष्यन्दभूमिः । तदु-रि नाम दर्शय ।

विदूषकः । ( तथा करोति ) ।

राजा । ( वाचयति ) निष्कृप ! वराक्याः । (प)

विदूषकः । उम्मुद्दिअ दंसइस्सं ( तथा कृत्वा ) भो अरअणं रअणकरंडअं अणक्खरो लेहो ( १ ) । (फ)

राजा । कामं (ब) करुणगम्भीरः प्रयोगः कन्दलयति मानसम् ( विचिन्त्य ) अपि तालोदलसंपुटम् ( विमृश्य )

---

(१) उन्मुद्र्य दर्शयिष्ये । भो अरत्नं रत्नकरण्डकमनक्षरो लेखः ।

---

( न ) विदूरवसुधा विदूराख्यपर्वतोपरिभूमिः रत्नगर्भाकारभूः रत्ना- ङ्कुरोत्पत्तिनिदानं. विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेति कुमारसम्भवमत्रानुसन्धातव्यम् । भवतः वचोवृत्तिः वाङ्निःसरणम् ।

( प ) निष्कृप ! निर्दय ! वराक्याः तपस्विन्याः ।

( फ ) उन्मुद्र्य मुद्रामुद्घाट्य मुक्तबन्धनं कृत्वा इत्यर्थः दर्श- यिष्ये । रत्नकरण्डकं रत्नभाजनम् अनक्षरः अक्षरशून्यः ।

( ब ) करुणगम्भीरः । करुणेन विरहजनितशोकेन गम्भीरः गभीरः दुर्बोध इत्यर्थः प्रयोगः प्रयुक्तो लेख इत्यर्थः मानसं कन्द- लयति पर्याकुलयति तालोदलसम्पुटं तालपत्ररूपं सम्पुटं (ठोङ्गा) विमृश्य विचिन्त्य तत्पत्रस्य अक्षरशून्यतया तस्य तालोदलस्य सम्भो- संसर्गी अक्षरलेखः अक्षररचना यस्याः तादृश्या मन्त्रगुप्तया कन्यया युक्तया परामर्शेण वा कृपया आत्मानं गोपायन्त्या इत्यर्थः कयाचिदिति शेषः । किश्चित् ईषत् कामतन्त्रं मदनविलसितम् आकुञ्चितम् प्रक- टितम् ।

तत् सन्धिबन्धनवेषया किञ्चिमन्यगुप्तया कामतन्त्रमासूचितं स्यात् ।

विदूषकः । ( तथा कृत्वा अवलोक्य सहर्षम् ) अहो ! ८ बुद्धिविहवो । किंवा वण्णनं मिअलंछणस्स रोहिणीवल्लहस्स त्ति ( १ ) ।

राजा । सविसङ्कुलं (भ) वाचयति ।

विधत्ते सोल्लेखं कतरदिह नाङ्गं तरुणिमा
तथापि प्रागल्भ्यं किमपि चतुरं लोचनयुगी ।
यदादत्ते हृद्यादखिलमपि भावव्यतिकरम् *
(सवितर्कं विचिन्त्य ।)

पाणिप्रेङ्खणतो विशीर्णशिरसः स्वेदाम्बुसंस्निग्ध-
स्ता इत्याकृतितो मनाङ् मनसि नः किञ्चित्प्रतीतिं गताः ।

---

( १ ) अहो ! ते बुद्धिविभवः किंवा वर्णनं मृगलाञ्छनस्य रोहिणीवल्लभस्येति ।

---

( भ ) सविसङ्कुलं सव्याकुलितम् ।

( * ) विधत्ते इति इह संसारे शरीरे वा तरुणिमा तारुण्यं सौवर्णमित्यर्थः कतरद् अङ्गं सोल्लेखं सम्यक् मार्जितं न करोति अपि तु सर्वमेव करोतीत्यर्थः तथापि तारुण्यस्य सर्वाङ्गमार्जकत्वेऽपीत्यर्थः लोचनयुगी किमपि अनिर्वचनीयं चतुरं सुनिपुणं प्रागल्भ्यं वैदग्ध्यं भजतीति शेषः यत् लोचनयुगं हृद्यात् हृदयनीयात् पदार्थात् अखिलं समग्रमपि अवस्थितकरं भावसमूहम् आदत्ते गृह्णाति । चतुर्थाङ्के चरणश्चैपादः कृतव्यः । चकोराक्षि दूरं सञ्चरयति दृश्यं प्रति जनमिति । अयमर्थः [illegible] चकोराक्षिणिः दृश्यं जनं प्रति दूरं सञ्चरयति सञ्चारी भवति कामयते इति भावः । शिखरिणीवृत्तम् ।

मण्डवं गदा, जं दाणीं मअरद्धअपअसरणि (२) व्व पअविच्छोली दीसदि, ता णिहुअं अप्पमत्ता भविअ णिरूवम्ह (१)। (तथा कुरुतः)।

मृगाङ्कावली। लतान्तरे चन्द्रिकास्पर्शमभिनीय)। (संस्कृतमाश्रित्य)।

प्रियविरहमहोष्मश्वासमुर्मुरामङ्गलेखा-
मपि हतकहिमांशो! मा स्पृश क्रीड़याऽपि।
इह हि तव लुठन्तःश्वासपीड़ां भजन्ते
दरजरठमृणालीकाण्डमुग्धा मयूखाः॥ २३॥

(इति दिक्षिरभिधाय रोदिति)।

राजा। (विदूषकं प्रति) कारय चक्षुषी पारणम्। (ल)

---

(१) इतो माधवीलतामण्डपं गता यदिदानीं मकरध्वजपदसरणि-रिव पदपंक्तिर्दृश्यते। तन्निभृतमप्रमत्तौ भूत्वा निरूपयावः।

---

(२) मकरध्वजपदसरणिः मदनपद्धतिः। निभृतं निःशब्दं अप्रमत्तौ अवहितौ निरूपयावः पश्यावः।

(२३) प्रियेति। हे हतकहिमांशो! हतकेति आक्षेपव्यञ्जकम्। प्रियविरहेण यः महान् उष्मा सन्तापः यस्य तादृशः श्वासः समन्तात् सर्वाङ्गव्यापीत्यर्थः मुर्मुरः तुषानलः यस्यां तथाभूतां अङ्गलेखां मदीयम् अङ्गमपीत्यर्थः क्रीड़यापि परिहासेनापीति भावः मा स्पृश। हि यतः दरजरठम् ईषत् परिणतं यत् मृणालीकाण्डं तद्वत् मुग्धा मनोज्ञाः तव मयूखाः इह मदङ्गे लुठन्तः पतन्तः सन्तः श्वासस्य दाहस्य पीड़ां भजन्ते लभन्ते। मालिनीवृत्तम्।

(ल) कारयेति चक्षुषी नयने पारणं कारय, दृष्टव्यदर्शनेन चरितार्थे कुरु इत्यर्थः।

अन्तस्तारं तरलतरलाः स्तोकमुत्पीडयन्तः
पक्ष्माग्रेषु ग्रथितपृषतः कीर्णधाराः क्रमेण।
चित्तातङ्कं निजगरिमतः सम्यगाख्यापयन्तो
निर्यान्त्यस्याः कुवलयदृशो बाष्पधाराप्रवाहाः॥ २४॥

अपि च, मुक्त्वानङ्गः कुसुमविशिखान् पञ्चकुण्ठीकृताग्रान्।
मन्ये मुग्धां प्रहरति हठात्पत्रिणा वारुणेन।
वारां पूरः कथमपरथा स्फारनेत्रप्रणाली-
वक्त्रोद्वान्तस्त्रिवलिविपिने सारणीसाम्यमेति॥ २५॥
(विदूषकं हस्ते गृहीत्वोपसृत्य सानुरागप्रश्रयम्)।

---

(२४) अन्तरिति। तरलतरलाः अतितरलाः स्तोकम् अल्पम् अन्तस्तारम् अन्तर्गतम् तारम् उत्पीडयन्तः क्षोभयन्तः पक्ष्माग्रेषु ग्रथिताः गुम्फिताः पृषतः बिन्दवः येषां तादृशाः क्रमेण कीर्णा विच्छिन्ना धारा येषां तथाभूताः तथा निजगरिमतः स्वीयगौरवात् चित्तातङ्कं चित्तसन्तापं सम्यक् आख्यापयन्तः वदन्तः अस्याः कुवलयदृशः नीलोत्पलाक्ष्याः बाष्पधाराम् अश्रूणाम् प्रवाहाः निर्यान्ति निर्गच्छन्ति। मन्दाक्रान्तावृत्तं मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गयुग्ममिति लक्षणात्।

(२५) मुक्तेति। अनङ्गः कामः पञ्च कुण्ठीकृताग्रान् कुण्ठिताग्रान् कुसुमविशिखान् पुष्पबाणान् मुक्त्वा निक्षिप्य हठात् बलात् वारुणेन पत्रिणा शरेण वारुणास्त्रेण इत्यर्थः मुग्धामिमां प्रहरति इति मन्ये सम्भावयामि, अपरथा अन्यथा स्फारे विकाशं गते नेत्रे एव प्रणाल्यौ तयोर्वक्त्रात् मुखात् उद्वान्तः उद्गीर्णः वारां पूरः अम्बुप्रवाहः त्रिवलिरेव विपिनं तस्मिन् सारणीसाम्यं नदीसादृश्यं कथं एति प्राप्नोति, नूनं कामस्य वारुणास्त्रप्रभाव एव इति भावः। उत्प्रेक्षालङ्कारः॥ मन्दाक्रान्ता वृत्तम्।

यस्य कृते वहति जनो
म्लपित मृणालोपमानि गात्राणि ।
तस्य कृते यदि सोऽ-
पिहि तदक्खुण्णसासनो मदनः ॥ २६ ॥

तदयं समदुःखसुखो जनस्त्वां विरचिताञ्जलिः प्रसारयति । (व)

मृगाङ्कावली । (स्वगतम् सस्पृहं ससाध्वसं च तमवलोक्य ।) किं एसो अणब्भो (ग्र) वरिसो, असुत्तिसंपुडागमा वा मोत्तिअउप्पत्ती कंचणलट्ठिअ व्व, सहआरीभूदा रीदि व्व कणअत्तणं उवगदा जस्स दंसणमहग्घदा तणू मे पलिभदि । (अपवार्य विचक्षणां प्रति) एसो सो सहि !

---

(२६) यस्येति । यस्य जनस्य कृते निमित्तं जनः म्लापितेन मृणालेन उपमा येषां तादृशानि कान्तिक्लिष्टानीत्यर्थः गात्राणि वहति, सोऽपि जनः तस्य जनस्य कृते यदि तथैव तत् तदा मदनः अक्षुण्णम् अप्रतिहतं शासनं यस्य तथाभूतः । सफलशासनो मदन इत्यर्थः ॥ [illegible] ।

(व) प्रसारयति प्रसादयतीत्यर्थः ।

(ग्र) अनभ्रः अभ्ररहितः मेघव्यतिरिक्त इत्यर्थः । अशुक्तिसम्पुटागमा शुक्तिसम्पुटात् आगमः यस्याः तादृशी न भवतीति अशुक्तिसम्पुटागमा मौक्तिकानाम् उत्पत्तिः । काञ्चनयष्टिः काञ्चनाख्यवृक्षविशेषः सहकारीभूता इव आम्रतरुत्वेन परिणता इव । रीतिः पित्तलाख्यधातुः कनकत्वं स्वर्णत्वम् उपगता प्राप्ता । यस्य तनुः दर्शने महार्घता महामूल्यता मे मम प्रतिभाति यस्य दर्शनं महामूल्यमहं मन्ये इत्यर्थः ।

राआ विज्जाहरमल्लो जो सिरीसरस्सईणं वल्लहो मअण-सुन्दरी अ जस्स वल्लहा सिरी सरस्सई मअणसुन्दरी अ (१)।

विचक्षणा । आँ । राजा ।

राजा । क्षणेन त्वेवं वक्तव्यं भवति । यो मृगाङ्कावली-वल्लभो यस्य मृगाङ्कावली वल्लभेति । (तां प्रत्यञ्जलिं बध्वा ।)

तरङ्गय दृशोऽङ्गने ! पततु चित्रमिन्दीवरं
स्फुटीकुरु रदच्छदं व्रजतु विद्रुमः श्वेतताम् ।
क्षणं वपुरपावृणु स्पृशतु काञ्चनं कालिमा
व्युदञ्चय मुखं मनाग्भवतु च द्विचन्द्रं नभः ॥ २७ ॥

---

(१) किमेषोऽनङ्गो वर्णः । अशुक्तिसंपुटागमा वा मौक्तिकोत्पत्तिः काञ्चनयष्टिरिव सहकारीभूता, रीतिरिव कनकत्वमुपगता यस्य दर्शनमहार्घता, तनुमें प्रतिभाति । एष स सखि ! राजा विद्याधरमल्लो यः श्रीसरस्वत्योर्वल्लभो मदनसुन्दरी च यस्य वल्लभा श्रीः सरस्वती मदन-सुन्दरी च ।

---

( २७ ) तरङ्गयेति । हे अङ्गने ! प्रशस्ताङ्गवति ! दृशः दृष्टीः तरङ्गय तरलीकुरु, चित्रं मनोज्ञम् इन्दीवरं पततु, अधो गच्छतु, दृशा निर्जितत्वादिति भावः । रदच्छदम् अधरं स्फुटीकुरु प्रकटय, विद्रुमः प्रवालमणिः श्वेततां धावल्यं व्रजतु प्राप्नोतु तवाधरसंनिधौ तस्य लौहित्यं न विकाशते इति भावः । वपुः शरीरं सर्वं अपावृणु आवरणशून्यं कुरु, कालिमा मालिन्यं काञ्चनं स्वर्णं स्पृशतु तवाङ्गसंनिधौ काञ्चनं मलिनायते इति भावः । तथा मुखं मनाक् अल्पं व्युदञ्चय विशेषेण उन्नताननं कुरु, यथात् नभः आकाशं द्विचन्द्रं चन्द्रद्वयसमन्वितं भवतु चन्द्रोऽयं सकलङ्कः तव मुखन्तु अकलङ्कम् अङ्गनमुखात्त्वेत् द्वितीयचन्द्र इव विराजते इति भावः । अत्र उपमानभूतेभ्यः इन्दीवरादिभ्यः उप-

मृगाङ्कावली। (स्वगतम्)। भअवदि मिअंकमंडणि जामिणि! सदजामा होहि चित्तसिखंडिदाम सत्तरिसि-मण्डलं (१)।

राजा। सखे! न हारलताविरहमर्हत्येषा। न चित्रशिखण्डिदामविना चकास्त्युदीचीति (ग) (कण्ठादवतार्य्य नायिकाकण्ठे हारं विधत्ते।)

विदूषकः। उचिदसमागमो हु एस कं ण रञ्जेदि जं दाणीं णिम्मलमुत्ताहलमालालङ्करणो सुन्दरीअणो वक्कोत्ति-विभूसणो अ सुकइवाणीबन्धो (२)।

---

(१) भगवति मृगाङ्कमण्डने यामिनि! शतयामा भव। चित्रशिखण्डिदाम सप्तर्षिमण्डलम्।

(२) उचितसमागम एष कं न रञ्जयति। यदिदानीं निर्म्मलमुक्ताफलमालालङ्करणः सुन्दरीजनो वक्रोक्तिविभूषणश्च सुकविवाणीबन्धः।

---

मेयतो नायिकानयनदीनामाधिक्यकीर्त्तनात् व्यतिरेकालङ्कारः। तदुक्तं दर्पणे। आधिक्यमुपमेयस्योपमानान्न्यूनताथवा। व्यतिरेक इति। पृथ्वी वृत्तम्।

(ख) मृगाङ्कमण्डने शशिशोभने। शतयामा शतप्रहरा। यथा सप्तर्षिमण्डलं चित्रशिखण्डिना साङ्कुरेण दाम्ना हारभूतेन शोभते तथा ते मृगाङ्कलक्ष्मतया शतयामत्वं शोभते इति भावः।

(ग) उदीची उत्तरादिक्।

(घ) उचितसमागमः समुचितसंगमः। रञ्जयति प्रीणयति। यत् यस्मात्। इदानीं साम्प्रतम्। निर्म्मलानि वर्त्तुलानि यानि मुक्ता-

